अथकिरातार्जुनीयेमहाकाव्येप्रथमसर्गप्रारंभः

श्रीगणेशायनमः अर्द्धांगीकृतदांपत्यमपिगाढानुरागियत् पितृभ्यांजगतस्तस्मैकस्मैचिन्महसेनमः १ आलंबेजगदालं
बेहेरंबचरणांबुजे शुष्यंतियद्रजःस्पर्शात्सद्यःप्रत्यूहवार्द्धयः २ तद्दिव्यमव्ययंधामसारस्वतमुपास्महे यत्प्रकाशात्प्रली
यंतेमोहांधतमसश्छटाः ३ वाणींकाणभुजीमजीगणदवाशासीच्च वैयासकीमंतस्तंत्रमरंस्तपन्नगगवीगुंफेषुचाजा
गरीत् वाचामाकलयद्रहस्यमखिलंयश्चाक्षपादस्फुरांलोकेभूद्यदुपज्ञमेवविदुषांसौजन्यजन्यंयशः ४ मल्लिनाथकविःसोयं
मंदात्मानुजिघृक्षया तत्किरातार्जुनीयाख्यंकाव्यंव्याख्यातुमिच्छति ५ नारिकेलफलसंमितंवचोभारवेःसपदितद्विभज्य
ते स्वादयंतुरसगर्भनिर्भरंसारमस्यरसिकायथेप्सितं ६ नानानिबंधविषमैकपदैर्नितांतंसाशंकसंक्रमणखिन्नधियामशं
कं कर्तुंप्रवेशमिहभारविकाव्यबंधेघंटापथंकमपिनूतनमातनिष्ये ७ इहान्वयमुखेनैवसर्वंव्याख्यायतेमया नामूलंलि
ख्यतेकिंचिन्नानपेक्षितमुच्यते ८ अथतत्रभवान्भारविर्नामाकविःकाव्यंयशसेर्थकृतेव्यवहारविदेशिवेतरक्षतये सद्यः
परनिर्वृतयेकांतासंमिततयोपदेशयुजइत्याद्यलंकारिकवचनप्रामाण्यात्काव्यस्यकीर्त्याद्यनेकश्रेयःसाधनतांकाव्याला-
पांश्चवर्जयेदितिनिषेधशास्त्रस्यासत्काव्यविषयतांचपश्यन्किरातार्जुनीयाख्यंकाव्यंचिकीर्षुश्चिकीर्षितार्थाविघ्नपरि
समाप्तिसंप्रदायाविच्छेदलक्षणफलसाधनत्वादाशीर्नमस्क्रियावस्तुनिर्देशोवापितन्मुखमित्याशीर्वादाद्यन्यतमस्यप्र १
बंधमुखलक्षणत्वाच्चवनेचरस्ययुधिष्ठिरप्राप्तिरूपंवस्तुनिर्दिशन्कथामुपक्षिपति श्रियइति आदितःश्रीशब्द

स्यप्रयोगाद्वर्णगणादिदोषशंकिनीतीवात्रोपयुज्यते तदुक्तं देवतावाचकाःशब्दायेचभद्रादिवाचकाः तेसर्वेनैवनिंद्याःस्युर्लि पितोगणतोपिचेति कुरूणांनिवासाःकुरवोजनपदाः तस्यनिवास इत्यण्प्रत्ययः जनपदेलुप् तेषामधिपस्यदुर्योधनस्यसंबंधि नीं शेषेषष्ठी श्रियःराजलक्ष्म्याः कर्तृकर्मणोःकृतीति कर्मणिषष्ठी पाल्यतेऽनयेतिपालनीतांप्रतिष्ठापिकामित्यर्थः प्रजानु रागमूलत्वात्संपदइतिभावः करणेल्युट् टिड्ढाणञित्यादिनाङीप् प्रजासुजनेषुविषये प्रजास्यात्संततौजनइत्यमरः वृत्तिंव्य

श्रियःकुरूणामधिपस्यपालनींप्रजासुवृत्तिंयमयुंक्तवेदितुं
सवर्णिलिंगीविदितःसमाययौयुधिष्ठिरंद्वैतवनेवनेचरः १

वहारं वेदितुंज्ञातुंयंवनेचरंनिषादमयुंक्त नियुक्तवान् वर्णःप्रशस्तिरस्यास्तीतिवर्णी ब्रह्मचारी वर्णाद्ब्रह्मचारिणीतीनप्रत्ययः त स्यलिंगंचिन्हमस्यास्तीतिवर्णिलिंगीब्रह्मचारिवेषधारी तदुक्तं स्मरणंकीर्तनंकेलिःप्रेक्षणंगुह्यभाषणं संकल्पोध्यवसाय श्चक्रियानिष्पत्तिरेवच एतन्मैथुनमष्टांगंप्रवदंतिमनीषिणः विपरीतंब्रह्मचर्यमेतदेवाष्टलक्षणं एतदष्टविधमैथुनाभावः प्रशस्तिरित्यर्थः वनेचरतीतिवनेचरः किरातः भिल्लः किरातःशबरःपुलिंदाम्लेंच्छजातयइत्यमरः चरेष्टइतिटप्रत्ययः तत्पु

रुपेष्वतिबहुलमित्यलुक् विदितंवेदनमस्यास्तीतिविदितः परराष्ट्रवृत्तांतज्ञानवानित्यर्थः अर्शआदित्वादच्प्रत्ययः अथवा
कर्तरिकर्मधर्मोपचारात् विदितपरवृत्तांतोविदितइत्युच्यते उभयत्रापिपीतागावोभुक्ताब्राह्मणा विभक्ताभ्रातरइत्यादिव-
त्साधुत्वं नतुकर्तरिक्तः सकर्मकेभ्यस्तस्यविधानाभावात् अतएवभाष्यकारेणाकारोमत्वर्थीयउक्तः विभक्तमेषामस्ती
तिविभक्ताः पीतमेषामस्तीतिपीताइति अथवोत्तरपदलोपोद्रष्टव्यः विभक्तधनाःविभक्ताःपीतोदकाःपीताइति अत्रलो-
पशब्दार्थमाहकैयटः गम्यमानार्थस्याप्रयोगएवलोपोऽभिमतः विभक्ताभ्रातरइत्यत्रचधनस्ययद्विभक्तत्वंतद्भ्रातृषूपचरि
तं पीतोदकागावइत्यत्राप्युदकपीनत्वंगोष्वारोप्यतइति तद्वदत्रापि वृत्तिगतंविदितत्वंवेत्तरिवनेचरउपचर्यते एतेनवनाय
पीतप्रतिबद्धवत्सांपातुंनप्रथमंव्यवस्यतिजलंयुष्मास्वपीतेषुइत्येवमादयोव्याख्याताः अथवाविदितोविदितवान् सकर्म
कादप्यविवक्षितेकर्मणिकर्तरिक्तः यथा आदर्शिताकर्तेत्यादौ यथाहुः धातोरर्थांतरेवृत्तेधात्वर्थेनोपसंग्रहात् प्रसिद्धेरवि
वक्षातः कर्मिणोकर्मिकाक्रियेति द्वैतवनेद्वैतारव्येतपोवने यद्वाद्वेक्षुत्पिपासेइतेगतेयस्मात्तत्द्वीतं तच्चतद्वनंचतस्मिन्
शोकमोहादिवर्जितमित्यर्थः युधिरणेस्थिरंयुधिष्ठिरं धर्मराजं हलदंतात्ससम्याःसंज्ञायामित्यलुक् गवियुधिभ्यांस्थिरइ
तिषत्वं समाययौसंप्राप्तः अत्रवनेवनेचरइतिद्वयोः स्वरव्यंजनससुदाययोरैक्याद्वृत्त्यनुप्रासोनामालंकारः अस्मिन्स २
र्गेवंशस्थंवृत्तं तल्लक्षणंतु जतौतुवंशस्थमुदीरितंजराविति १

संप्रतिवनेचरस्यतत्कालौचित्यमादर्शयन् तस्यतद्गुणसंपन्नत्वमाह कृतेति कृतप्रणामस्यतत्कालोचितत्वात् कृतनमस्कार स्यसपत्नेनरिपुणा रिपुर्वैरिसपत्नारिद्विषद्द्वेषणदुर्हृदइत्यमरः जितांस्वीयत्वीकृतांमहींमहीभुजेयुधिष्ठिराय क्रियाग्रह

कृतप्रणामस्यमहींमहीभुजेजितांसपत्नेनर्निवेदयिष्यतः नविव्यथेतस्यमनोनहिप्रियं- प्रवक्तुमिच्छंतिमृषाहितैषिणः २ द्विषांविघातायविधातुमिच्छतोरहस्यनुज्ञामधिग- म्यभूभृतः ससौष्ठवौदार्यविशेषशालिनींविनिश्चितार्थामितिवाचमाददे ३ सांव्-

गात्संप्रदानत्वं निवेदयिष्यतोविज्ञापयिष्यतः लृटःसद्वेतिसत्प्रत्ययः तस्यवनेचरस्यमनोनविव्यथे कथमीदृगप्रियंराज्ञे विज्ञापयामीतिमनसिनचचालेत्यर्थः व्यथभयसंचलनयोरितिधातोर्लिट् उक्तमर्थमर्था तरोपन्यासेनद्रढयति नहीति

ह्रियस्माद्भिन्नमिच्छंतीतिर्हितैषिणः स्वामिहितार्थिनः पुरुषाः मृषामिथ्याभूतंप्रियंवक्तुंनेच्छंति अन्यथाकार्यविघातकतया
स्वामिद्रोहिणः स्युरितिभावः अमोघममर्मांघ्रममृषाभाषित्वमभ्यूहकत्वंचेतिचारगुणाइतिनीतिवाक्यामृते २ तथा-
पिप्रियार्हैराज्ञिकटुनिष्ठुरोक्तिर्नयुक्तेत्याशंक्यस्वाम्यनुज्ञयानदुष्यतीत्याशयेनाह द्विषामिति रहस्येकांतेसवनेचरः द्विषां
शत्रूणांकर्मणिषष्ठी विघातायविहंतुमित्यर्थः तुमर्थाच्चभाववचनादितिचतुर्थी भाववचनाच्चेतितुमुनर्थेघञ्प्रत्ययः
अत्रतादर्थ्यमपिनदोषः तथापिप्रयोगवैचित्र्यविशेषस्याप्यलंकारत्वादेवंव्याचक्षते विधातुंव्यापारंकर्तुमिच्छतः स-
मानकर्तृकेषुतुमुन् द्विषोविहंतुमुद्युक्तस्येत्यर्थः अतएवप्रभूतोयुधिष्ठिरस्यानुज्ञामधिगम्य स्फुटभावः सौष्ठवंशब्द
सामर्थ्यं स्फुटशब्दादव्ययाद्युद्गात्रादित्वात्ष्यञ्प्रत्ययः उदारस्यभावः औदार्यं अर्थसंपत्तिः तयोर्द्वंद्वः सौष्ठवौदार्ये अ-
त्रौदार्येशब्दस्याजाद्यदंतत्वेपिलक्षणहेत्वोः क्रियायाइत्यत्राल्पाच्तरस्यापिहेतुशब्दस्यपूर्वनिपातमकुर्वतासूत्रकृतैव
पूर्वनिपातस्यानित्यत्वज्ञापनान्नपूर्वनिपातः उक्तंचकाशिकायां अयमेवलक्षणहेत्वोरितिनिर्देशः पूर्वनिपातव्यभिचा
रचिन्हमिति तेएवविशेषः तयोर्वाविशेषः तेनशालतेशोभतइतिसौष्ठवौदार्यविशेषशालिनीतां ताच्छील्येणिनिः वि-
निश्चितार्थांविशेषतः प्रमाणतोनिर्णीतार्थां इतिवक्ष्यमाणरूपां वाचमाददे स्वीकृतवान् उवाचेत्यर्थः ३ श्रीगोपा ३
लकृष्णायनमः ७ ७ ७ ७ ७

प्रथमंतावद्भिर्यांनिवेदकमात्मानंप्रत्यक्षोभंयाचते क्रियास्विति हे नृपक्रियासुकृत्यवस्तुषुयुक्तैर्नियुक्तैरनुजीविभिः भृत्यैः चारादिभिरित्यर्थः चरंतीतिचराः तएवचा राः पचाद्यदंतात्प्रज्ञादित्वादण्प्रत्ययः तएवचक्षूंषियेषांतेचारचक्षुषः स्वपरमंडलेकार्याकार्यावलोकनेचाराश्चक्षूंषि क्षितिपालानामितिनीतिवाक्यामृते तदुक्तं चारैःपश्यंतिराजानोवेदैःपश्यंतिवा इवाः गंधेनगावःपश्यंतिचक्षुर्भ्यामितरेजनाइति प्रभवोनिग्रहानुग्रहसमर्थाः स्वामिनोनवंचनीयाः नप्रतारणीयाः सत्य

क्रियासुयुक्तैर्नृपचारचक्षुषोनवंचनीयाः प्रभवोनुजीविभिः अतोर्हसि
क्षंतुमसाधुसाधुवाहितंमनोहारिचदुर्लभंवचः ४ ७ ७

मेववक्तव्याइत्यर्थः चारापचारेचक्षुरपचारवद्राज्ञांपदेपदेनिपातइतिभावः अतोप्रतार्यत्वाद्धेतोः असाधुअप्रियंसाधुप्रियंवा मदुक्तमितिशेषः क्षंतुंसोढुमर्हसि अत्रहितीयार्थोलक्ष्यते मदुक्तमसाधुसाधुवासाध्विववाशब्दइवार्थे इवार्थेचविकल्पेस्याहेतिवास्याहिकल्पोपमयोरेवार्थेपिसमुच्चयइतिविश्वः मदुक्तमसाध्वपिसाध्विवश्रोतुमर्हसीत्यर्थः कुतः हितंपथ्यंमनोहारिप्रियंचवचोदुर्लभं अतोमद्वचोहितत्वादप्रियमपिक्षंतव्यमित्यर्थः ४ ७ ७

तर्हितूष्णींभावएववरमित्याशंक्याह सइति यः अमात्यादिःसखा अधिपंस्वामिनंसाधुहितंनशास्तिनोपदिशति चिब्रूशास्वित्या
दिनाशासेर्दुहादिपाठात् द्विकर्मकत्वं सहितानुपदेष्टाकुत्सितःसखाकिंसखा दुर्मंत्रीत्यर्थः किमःक्षेपइतिसमासांतप्रतिषेधः
तथायःप्रभुःनिग्रहानुग्रहसमर्थःस्वामी हितादाप्तजनात् आख्यातोपयोगइत्यपादानत्वात्पंचमी नसंशृणुतेनशृणोति
समोगम्यृच्छीत्यादिनासंपूर्वाच्छृणोतेरकर्मकादात्मनेपदं अकर्मकत्वंचविवक्षितं सहितमश्रोताप्रभुःकिंप्रभुः कुत्सितःस्वामी

सकिंसखासाधुनशास्तियोऽधिपंहितान्नयःसंशृणुतेसकिंप्रभुः सदानु
कूलेषुहिकुर्वतेरतिंनृपेष्वमात्येषुचसर्वसंपदः ५ श्रीगजाननप्र०

पूर्ववत्समासः सर्वथासखिवेनवक्तव्यंस्वामिनाश्रोतव्यं एवंचराजमंत्रिणोरैकमत्यंस्यादित्यर्थः ऐकमत्यस्यफलमाह सदेति
हियस्मान्नृपेषुस्वामिषु अमासहभवाः अमात्याः तेषुच अव्ययात्यप् अनुकूलेषुपरस्परानुरक्तेषुसत्सुसर्वसंपदःसदारतिम
नुरागंकुर्वतेकुर्वंति नजातुजहतीत्यर्थः अतोमयावक्तव्यंत्वयाश्रोतव्यमितिभावः अत्रैवराजमंत्रिणोर्हितानुपदेशतदश्रवण
निंदासामर्थ्यसिद्धेरैकमत्यलक्षणकारणस्यनिर्दिष्टस्यसर्वसंपत्सिद्धिरूपकार्येणसमर्थनात्कार्येणकारणसमर्थनरूपोर्थां ४
तरन्यासः तदुक्तं सामान्यविशेषकार्यकारणभावाभ्यांनिर्दिष्टप्रकृतसमर्थनमर्थांतरन्यासइति ५ ७ ७

संप्रतिस्वाहंकारंपरिहरति निसर्गेति निसर्गदुर्बोधंस्वभावदुर्ग्रहं ईषद्दुरित्यादिनाखल्प्रत्ययः भूपतीनांचरितंक्व अबोधविक्लवाः अज्ञानोपहताजंतवोमादृशाः पामरजनाइत्यर्थः क्वनोभयमेकत्रसंघटतइत्यर्थः तथापिनिगूढतत्वंसंवृतयाथार्थ्यंविद्विषांनयवर्त्मषाड्गुण्यप्रयोगोमयाअवेदिज्ञातमितियत् विदेःकर्मणिलुङ् संधिविग्रहयानानिसंस्थाप्यासनमेवच द्वैधीभावश्चविज्ञेयाःषड्गुणानीतिवर्णने संधिर्मैत्रीकरणं विग्रहःपरपीडनं यानंपरंप्रतिगमनं संस्थापरस्यदेहार्पणं आस

निसर्गदुर्बोधमबोधविक्लवाःक्वभूपतीनांचरितंक्वजंतवः तवानुभावो
यमवेदियन्मयानिगूढतत्वंनयवर्त्मविद्विषाम् ६ छ छ

नंउपेक्षणं एकेनसार्द्धंसंधाय अपरंप्रतियानंद्वैधीभावः अयंइदंवेदनमित्यर्थः विधेयप्राधान्यात्पुल्लिंगनिर्देशः तवानुभावःसामर्थ्यं अनुगतोभावोऽनुभावइतिघञंतेनप्रादिसमासः नतूपसृष्टात् घञ्प्रत्ययः श्रिणीभुवोनुपसर्गइत्यनुपसर्गोद्भवतेर्धातोर्घञ्विधानात् अतएवकाशिकायांकथंप्रभावोराज्ञांप्रकृष्टोभावइतिप्रादिसमासइतिदोषपरिहारो सम्यक्ज्ञात्वैवविज्ञापयामिनतुवृथाकर्णकठोरंप्रलपामीत्याशयः ६ छ छ छ

संप्रतियद्वक्तव्यंतदाह विशंकमानइति सुरत्वेनयुध्यतइतिसुयोधनः भाषायांशासिसुधिदृशिधृषिमृषिभ्योयुच् नृपासन
स्थः सिंहासनस्थोपिवनमधिवसतीतिवनाधिवासिनोवनस्थात् राज्यभ्रष्टादित्यर्थः भवतस्त्वत्तःपराभवंपराजयंवि-
शंकमानःउत्प्रेक्षमाणःसन् दुष्टमुदरंयस्येतिदुरोदरंद्यूतं पृषोदरादित्वात्साधुः दुरोदरोद्यूतकारेपणेद्यूतेदुरोदरमि-

विशंकमानोभवतःपराभवंनृपासनस्थोपिवनाधिवासिनः दुरोद
रच्छद्मजितांसमीहतेनयेनजेतुंजगतींसुयोधनः ७ श्रीग० ७

त्यमरः तस्यच्छद्मनाभिषेणजितांलब्धां दुर्नयार्जितामित्यर्थः जगतींमहीं जगतीविष्टपेमर्त्यांवास्तुच्छंदोविशेषयो
रितिवैजयंती नयेननीत्याजेतुंवशीकर्तुंसमीहतेव्याप्रियते नतूद्यास्तइत्यर्थः बलवत्स्वामिकमविश्रब्धागमंचध
नंभुंजानस्यकुतोमनसःसमाधिरितिभावः अत्रदुरोदरच्छद्मजितामितिविशेषणद्वारेणपदार्थस्यचतुर्थपादा- ५
र्थंप्रतिहेतुत्वेनोपन्यासात् द्वितीयकाव्यलिंगमलंकारः तदुक्तं हेतोर्वाक्यपदार्थत्वेकाव्यलिंगमुदाहृतमिति ७

नयेनजेतुंजगतींसमीहतइत्युक्तंतत्प्रकारमाह तथेति तथापिसाशंकोपि जिह्मोवक्रोवंचकइतियावत् सदुर्योधनः भव
ज्जिगीषयागुणैर्भवंतमाक्रमितुमिच्छयेत्यर्थः हेतावितितृतीया गुणसंपदादानदाक्षिण्यादिगुणगरिम्णाकरणेनशु
भ्रंयशस्तनोति सखलोपिगुणलोभनीयांत्वत्संपदमात्मसात्कर्तुंत्वत्तोपिगुणवत्तामात्मनःप्रकटयतीत्यर्थः नन्वेवंगु
णिनःसतोपिसज्जनविरोधोमहांस्तस्यदोषइत्याशंक्यसोपिनतत्संसर्गालाभेनीचसमागमाद्वासुत्कर्षावहत्वादित्याह स

तथापिजिह्मःसभवज्जिगीषयातनोतिशुभ्रंगुणसंपदायशः समुन्नयन्भूतिमनार्य
संगमाद्वरंविरोधोऽपिसमंमहात्मभिः ८ कृतारिषड्वर्गजयेनमानवीमगम्यरूपांपदवीं
प्रपित्सुना विभज्यनक्तंदिवमस्ततंद्रिणावितन्यतेतेननयेनपौरुषम् ९ श्रीरामाय०

मुन्नयन्निति तथाहि भूतिंसमुन्नयन् उत्कर्षमापादयन् लटःशतृशानचावित्यादिनाशतृप्रत्ययः पुनर्लड्ग्रहणसाम
र्थ्यात् प्रथमासामानाधिकरण्येपि महात्मभिःसमंसहेत्यर्थः साकंसार्द्धंसमंसहेत्यमरः अनार्यसंगमात्दुर्जनसंग
मात् पंचमीविभक्तइतिपंचमी विरोधोपिवरंमनाक्प्रियं देवाद्वृतेवरःश्रेष्ठेत्रिषुक्लीबेमनाक्प्रियइत्यमरः अत्रमे
व्यपेक्षयामनाक्प्रियत्वंविरोधस्य भूतिंसमुन्नयन्नित्यस्यपूर्ववाक्यान्वयेसमासस्यवाक्यार्थस्यपुनरादानात्समा

सपुनरादानदोषापत्तिः तदुक्तंकाव्यप्रकाशे समाप्तपुनरादानात्समाप्तपुनरात्तकमिति नचवाक्यांतरमेतत् येनोक्तदोषप
रिहारःस्यात् अर्थांतरन्यासोलंकारः सचभूतिसमुन्नयस्यपदार्थविशेषणद्वाराविरोधवत्वंप्रतिहेतुत्वाभिधानरूप-
काव्यलिंगानुप्राणितइति ८ ननुकातर्यंकेवलानीतिरित्याशंक्यनीतियुक्तंपौरुषमस्येत्याह कृतारिषड्वर्गजयेने
ति षण्णांवर्गःषड्वर्गः अरीणामंतःशत्रूणांकामक्रोधादीनांषड्वर्गोरिषड्वर्गः शिवभागवतवत्समासः तस्यजयःकृ
तोयेनतेनतथोक्तेनविनीतेनेत्यर्थः विनीताधिकारंप्रजापालनमितिभावः अगम्यरूपांदुराकलनीयां मनोरियंमा
नवीतां मनूपदिष्टसदाचारलक्षणां पदवींप्रजापालनपद्धतिं प्रपित्सुनाप्रपिपत्तुमिच्छुना प्रपद्यतेः सन्नंतादुप्रत्ययः
सनिमीमेत्यादिनाइसादेशः अत्रलोपोभ्यासस्येत्यभ्यासलोपः अस्तातंद्रिरालस्यंयस्यतेनास्ततंद्रिणा अनलसेने-
त्यर्थः तंद्रिःसौत्रोधातुस्तस्माच्चत्रयादयश्चेत्यौणादिकइकारप्रत्ययः कृदिकारादक्तिनोवाङीषुवक्तव्यइतिघटीनि
द्रीतंद्रीतिङीषंतोऽपीतिक्षीरस्वामी निद्रातंद्रेत्याबंतोपि तथाचरामायणे प्रयोगः सनिस्तंद्रिरमत्तश्चस्वदोषपरदोष
विदिति तेनदुर्योधनेन पुरुषस्यकर्मपौरुषंपुरुषाकारउद्योगइतियावत् युवादित्वादण्प्रत्ययः पौरुषंपुरुषस्योक्ते
भावेकर्मणिनेजसीतिविश्वः नक्तंचादिवाचनक्तंदिवं अहोरात्रयोरित्यर्थः अचतुरेत्यादिनाससम्यर्थवृत्त्योरव्यययोर्द्वं ६
द्वनिपातःसमासांतः विभज्य अस्यांवेलायामिदंकर्मेतिविभागंकृत्वा नयेननीत्या वितन्यते विस्तार्यते ९ छ

संप्रति भृत्याद्यनुरागमाह सखीनिति गतस्मयो निरहंकारः स्मयो गर्वे द्रुते योगे कातर्ये गायके पिचेति विश्वः अतएव सदुर्योधनः संततं निरंतरं साधु सम्यगकपटमित्यर्थः अनुजीविनो भृत्यान् प्रीतियुजः स्निग्धान् सखीन् मित्राणीव दर्शयते लोकस्येति शेषः हेतुमति चेति णिच् णिचश्चेत्यात्मनेपदं शोभनं हृदयं येषां तान् सुहृदो मित्राणि सुहृद्दुर्हृदौ मित्रा-

सखीनिव प्रीतियुजोऽनुजीविनः समानमानान्सुहृदश्च बंधुभिः

मित्रयोरिति निपातः बंधुभिः भ्रात्रादिभिः समानमानान् तुल्यसत्कारान् दर्शयते बंधूनां समूहो बंधुता तां ग्रामजनबंधुसहायेभ्यः इति तल् कृतमाधिपत्यं स्वाम्यं यस्यास्तां कृताधिपत्यामिव दर्शयते बंधूनधिपतीनिव दर्शयतीत्यर्थः यथा भृत्यादिषु सख्यादिबुद्धिर्जायते लोकस्य तथा तान्संभावयतीत्यर्थः अनुजीव्यादीनां कर्तुरीप्सिततमं कर्मेति कर्मत्वं पूर्ववत्

स्मिन्नेव पदान्वये वाक्यार्थमित्थं वर्णयंति स राजानुजीव्यादीन्सख्यादीनिव दर्शयते सख्यादय इव ते पश्यंति सख्यादि भावेन पश्यतस्तांस्तथा दर्शयते स्वयमेव छंदानुवर्तितया स्वदर्शनं तेभ्यः प्रयच्छतीत्यर्थः अर्थात्तस्येप्सिततमत्वं अणिकर्तुरनुजीव्यादेरभिवादिदृशोरात्मनेपद उपसंख्यानमिति पाक्षिकं कर्मत्वं एवं चात्राण्यंतत्वकर्मणो राज्ञो ण्यंते कर्तृत्वे प्यारोहयते हस्ती स्वयमेवेत्यादिवद श्रूयमाणकर्मांतरत्वाभावान्नायं णेरणाविति सूत्रस्य विषय इति मत्वा णिचश्चेत्ये

सस‌ंततं दर्शयते गतस्मयः कृताधिपत्यामिव साधु बंधुतां १०

वात्मनेपदं प्रतिपेदिरे भाष्ये तु णेरणाविति सूत्रविषयत्वमप्यस्योक्तं यथाह पश्यंति भृत्या राजानं दर्शयते भृत्यान्राजा दर्शयते भृत्यै राजेत्यात्मनेपदं सिद्धं भवतीति अत्र कैयटः न तु कर्मांतरसद्भावादत्रानेनात्मनेपदेन भाव्यमुच्यते अस्मादेवोदाहरणाद्भाष्यकारस्यायमेवाभिप्राय ऊह्यते अण्यंतावस्थायां येकर्तृकर्मणी तद्व्यतिरिक्तकर्मांतरसद्भावे आत्मनेपदं न भवति यथा स्थलमारोहयति मनुष्यानिति इह त्वण्यंतावस्थायां कर्तृणां भृत्यानां णौ कर्मत्वमिति भवत्येवात्मनेपदमिति १०

नचावंत्रिवर्गोत्समाद्यतीत्याह असक्तमिति यथायथंयथास्वं विभज्य असंकीर्णरूपंविविच्येत्यर्थः यथास्वेयथाय
थमितिनिपातेद्विर्भावोनपुंसकत्वंच ह्रस्वोनपुंसकेप्रातिपदिकस्येतिह्रस्वत्वं पक्षेपातः पक्षपातः आसक्तिविशेषः स
मस्तुल्योयस्यांतयासमपक्षपातया भक्त्यानुरागविशेषेण पूज्येष्वनुरागोभक्तिरित्युपदेशः पूज्यश्चायंत्रिवर्गः असक्त
मनासक्तमव्यसनितयेतियावत् आराधयतः सेवमानस्य अस्यदुर्योधनस्य त्रयाणांधर्मार्थकामानांगणस्त्रिगणः त्रि

असक्तमाराधयतोयथायथंविभज्यभक्त्यासमपक्षपातया
गुणानुरागादिवसख्यमीयिवान्नबाधतेस्य त्रिगुणः परस्परं ११

वर्गोधर्मकामार्थैश्चतुर्वर्गः समोक्षकैरित्यमरः गुणानुरागात्तदीयगुणेष्वनुरागात् गुणवदाश्रयलोभादित्यर्थः सख्यं
मैत्रीं सख्युर्यइतियप्रत्ययः ईयिवानिवउपगतवानिवेत्युत्प्रेक्षा उपेयिवाननाश्वाननूचानश्चेतिक्वसुप्रत्ययांतोनिपातः
नात्रोपसर्गस्तंत्रमितिकाशिकाकारआहस्म परंपरंनबाधतेसमवर्तित्वादस्यधर्मार्थकामाः परस्परानुपमर्देनव-
र्द्धितइत्यर्थः उक्तंच धर्मार्थकामाः सममेवसेव्यायोह्येकसक्तः सनरोजघन्यइति ११ ७

अथश्लोकत्रयेणोपायकौशल्यंदर्शयन्नादौसामदानेदर्शयति निरत्ययमिति तस्यदुर्योधनस्यनिरत्ययंनिर्बाधकंअ
मायिकमित्यर्थः अन्यथोन्नतानांदुर्ग्रहत्वादितिभावः सामसांत्वं सामसांत्वमुभेसमइत्यमरः साम प्रेमपरंवाक्यंदानं-
चार्थविसर्जनं भेदःपर जनाकृष्टिर्निग्रहःपरपीडनं दानवर्जितंनप्रवर्तते अन्यथालुब्धाद्यार्जवनस्यशुष्कप्रियैर्वचनै
र्दुष्करत्वादितिभावः उक्तंच लुब्धमर्थेनगृह्णीयात्स्तब्धमंजलिकर्मणा मूर्खंछंदोनुरोधेनतत्वार्थेनचपंडितमिति त-
थाभूरिप्रभूतं नतुकदाचित्स्वल्पमित्यर्थः दानंधनत्यागः सदित्यादरार्थेऽव्ययं आदरानादरयोःसदसतीतिनिपातसंज्ञा

निरत्ययंसामनदानवर्जितंनभूरिदानंविरहय्यसत्क्रियां प्रवर्ततेतस्यविशेषशालिनीगुणानुरोधेनविनानसत्क्रिया
१२

स्मरणात् तस्यक्रियातांसत्क्रियां विरहय्यविहाय ल्यपिलघुपूर्वादित्ययादेशः नप्रवर्तते अनादरेदानंवैफल्यादितिभा
वः नचैवंसर्वत्रानेनाविवेकित्वंकोशङ्काानिश्चस्यादित्याह विशेषशालिनीअतिशययोगिनीसत्क्रियागुणानुरोधेनगुणानुरा
गेणविनानप्रवर्तते पृथग्विनेत्यादिनातृतीया गुणेष्वेवादरोभूरिदानंचेतिनोक्तदोषावकाशइत्यर्थः अत्रोत्तरोत्तरस्यपूर्व
पूर्वविशेषणतयास्थापनादेकावल्यंकारः तदुक्तंकाव्यप्रकाशे स्थाप्यतेपोह्यतेवापितथापूर्वंपरंपरं विशेषणतयावस्तुय ८
त्रसैकावलीद्विधेति तथाचोदाहरणं नतज्जलंयन्नसुचारुपंकजंनपंकजंतद्यदलीनषट्पदं नषट्पदोसौकलगुंजितोनयोन
गुंजितंतन्नजहारयन्मनइति१२

अथदंडप्रकारमाह वसूनिति वशीजितेंद्रियः सदुर्योधनः वसूनिधनानि वसुतोयेधनेमणाविति वैजयंती वांछन्सन् लोभेनेत्यर्थः ननिहंतीतिशेषः तथामन्युनाकोपेन नच मन्युर्दैन्येक्रतौक्रुधीत्यमरः धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितइतिस्मरणादित्यर्थः किंतुनिवृत्तकारणोनिवृत्तलोभादिनिमित्तः सन् स्वधर्मइत्येषस्वस्यराज्ञः सतोममायं धर्मोममेदं कर्तव्यमित्यस्मादेवहेतोरित्यर्थः अदंड्यान्दंडयन्राजादंड्यांश्चैवाप्यदंडयन् अयशोमहदाप्नोति नरकंचाधिगच्छ

वसूनिवांछन्नवशीनमन्युनास्वधर्मइत्येषनिवृत्तकारणः
गुरूपदिष्टेनरिपौसुतेपिवानिहंतिदंडेनसधर्मविप्लवं १३

तीतिमनुस्मरणादितिभावः गुरूपदिष्टेनप्राड्विवाकोपदिष्टेन धर्मशास्त्रंपुरस्कृत्यप्राड्विवाकमतेस्थितः समाहितमतिः पश्येद्व्यवहाराननुक्रमादितिनारदस्मरणात् दंडेनदमेनशिक्षयेत्यर्थः रिपौसुतेपिवास्थितमितिशेषः एतेनास्य समदर्शित्वमुक्तं धर्मविप्लवंधर्मव्यतिक्रमं अधर्ममितियावत् निहंतिनिवारयति दुष्टएवास्यशत्रुः शिष्टएवास्यबंधुः नतुसंबंधनिबंधनः पक्षपातोस्तीत्यर्थः १३ ७ ७ ७

संप्रतिभेदकौशल्यंदर्शयति विधायेति शंकासंजातायस्यशंकितोऽविश्वस्तःसन् परितोसर्वमंडले परेतरानात्मीया
न् अवंचकानितियावत् यद्वापरानितरयंति भेदेनात्मसात्कुर्वंतीतिपरेतरास्तान् तत्करोतीतिण्यंतात्कर्मण्यण्प्रत्य
यः रक्षंतीतिरक्षास्तान् रक्षकान् मंत्रगुप्तिसमर्थानित्यर्थः नंदिग्रहीत्यादिनापचाद्यच् विधायकृत्वा नियुज्येत्यर्थः अशं
कितस्याकारमुपैति स्वयमविश्वस्तोपिविश्वस्तवदेवव्यवहरन्परमुखेनैवपरान्भिनत्तीत्यर्थः नचतान्रक्षानुपेक्ष

विधायरक्षान्परितःपरेतरानशंकिताकारमुपैतिशंकितः
क्रियापवर्गेष्वनुजीविसात्कृताःकृतज्ञतामस्यवदंतिसंपदः १४

तेयेनतेविकुर्वीरन्नित्याह क्रियेति क्रियापवर्गेषुकर्मसमाप्तिषु अनुजीविसात्कृताः भृत्याधीनाः कृताः अपुनरा
वृत्तितयादत्ताइत्यर्थः देयेत्राचेतिसातिप्रत्ययः संपदोऽस्यराज्ञः कृतज्ञतां उपकारज्ञत्वंवदंति प्रीतिज्ञानैरेवास्यकृ ९
तज्ञत्वंप्रकाश्यतेनतुवाङ्मात्रेणेत्यर्थः कृतज्ञेराजन्यनुजीविनोऽनुरज्यंते अनुरक्ताश्चतंरक्षंतीतिभावः १४ छ

अथोपायप्रयोगस्य फलवत्तां दर्शयति अनारतमिति तेन राज्ञा पदेषु उपादेयवस्तुषु पदं व्यवसितत्राणस्थानलक्ष्मां घ्रिवस्तुष्वित्यमरः सम्यगसंकीर्णं अव्यक्तं च विभज्य विनियोगसत्क्रिया अनुग्रहसत्काराइतियावत् ताः लंभिताः प्रापिताः स्थानेषु सम्यक्प्रयुक्ताइत्यर्थः उपायविशेषणं वा उपायाः सामादयः संघर्षं परस्परस्पर्द्धां उपेत्येवेत्युत्प्रेक्षा परिबृं हितायतीः प्रचितोत्तरकालाः स्थिराइत्यर्थः अर्थसंपदोनारतमजस्रं फलंति प्रसवंतीत्यर्थः १५ अर्थसंपदमेवाह अ नेकराजन्येति अयुग्मछदस्य सप्तपर्णपुष्पस्य गंधइव गंधो यस्य सोऽयुग्मच्छदगंधिः सप्तम्युपमानेत्यादिना बहुव्री-

अनारतं तेन पदेषु लंभिता विभज्य सम्यग्विनियोगसत्क्रियाः फलंत्युपायाः परिबृंहितायतीरुपेत्य संघर्षमिवार्थसंपदः १५
अनेकराजन्यरथाश्वसंकुलं तदीयमास्थाननिकेतनाजिरं नयंत्ययुग्मछदगंधिरार्द्रतां भृशं नृपोपायनदंतिनां मदः १६

हिरुत्तरपदलोपश्च उपमानाच्चेति समासांतइकारः नृपाणां उपायनान्युपहारभूता ये दंतिनस्तेषां मदः उपायनमुपग्राह्यमुपहा रस्तथोपदेत्यमरः राज्ञामपत्यानि पुमांसोराजन्याः क्षत्रियाः राजश्वशुराद्यत् इति यत्प्रत्ययः राज्ञोपत्येजातिग्रहणात् रथाश्चा श्वाश्चरथाश्वं सेनांगत्वादेकवद्भावः अनेकेषां राजन्यानां रथाश्वेन संकुलं तदीयमास्थाननिकेतनाजिरं सभामंडपांगणं भृश मार्द्रतां पंकिलतां नयति एतेन महासमृद्धिरस्योक्ता अतएवोदात्तालंकारः तथा चालंकारसूत्रं समृद्धिमद्वस्तुवर्णनमुदात्तइ ति १६

संप्रतिजनपदक्षेमकरत्वमाह सुखेनेति चिरायतस्मिन्दुर्योधनेक्षेमंवितन्वतिक्षेमंकरेसति देवः पर्जन्यएवमातायेषां तेदेवमातृकाः वृष्ट्यंबुजीविनोदेशाः तेनभवंतीत्यदेवमातृकाः नदीमातृकाइत्यर्थः देशोनद्यंबुवृष्ट्यंबुसंपन्नव्रीहिपालितः स्यान्नदीमातृकोदेवमातृकश्चयथाक्रममित्यमरः एतेनास्यकुल्यादिपूर्तप्रवर्तकत्वमुक्तं कुरूणांनिवासाः कुरवोजनपदविशेषाः कृष्टेनपच्यंतइतिकृष्टपच्याः राजसूयेत्यादिनाकर्मकर्तरिक्यब्प्रत्ययांतोनिपातः तद्विपरीताः अकृष्टपच्याइव

सुखेनलभ्यादधतःकृषीवलैरकृष्टपच्याइवसस्यसंपदः
वितन्वतिक्षेममदेवमातृकाश्चिरायतस्मिन्कुरवश्चकासति १७

कृषिर्येषामस्तीतिकृषीवलास्तैःकर्षकैः रजःकृष्यासुनीत्यादिनावलच्प्रत्ययः वलइतिदीर्घः सुखेनाक्लेशेनलभ्याः लब्धुंशक्याः सस्यसंपदोदधतोधारयंतः नाभ्यस्तात्छतुरितिनुमागमप्रतिषेधः चकासति सर्वोत्कर्षेणवर्तंतइत्यर्थः अदभ्यस्तादितिझेरदादेशः जक्षित्यादयःषडित्यभ्यस्तसंज्ञा संपन्नजनपदत्वात्तदसंतापकारत्वाच्च दुःसाध्योयमितिभावः १७ १०

ननुएवंजनपदानुवर्तिनस्तस्यकथंअर्थलाभः इत्याह उदारकीर्तेरिति उदारकीर्तेर्महायशसः उदारोदातृमहतोरित्यमरः द
यावतः परदुःखप्रहरणेच्छोः अतएवप्रशांतबाधंप्रशमितोपद्रवंक्रियाविशेषणमुदयविशेषणंवा वादांतशांतेत्यादि-
नाशमिधातोर्ण्यंतान्निष्ठांतोनिपातः अभिरक्षयासर्वतस्त्राणेनोदयंबुद्धिंदिशतःसंपादयतः वसूपमानस्यकुबेरोपम
स्य वसुर्मयूखाग्निधनाधिपेष्विति विश्वः अस्यदुर्योधनस्यगुणैर्दयादाक्षिण्यादिभिःउपस्नुताद्राविता मेदिनी वसू

उदारकीर्तेरुदयंदयावतः प्रशांतबाधंदिशतोभिरक्षया
स्वयंप्रदुग्धेऽस्यगुणैरुपस्नुतावसूपमानस्यवसूनिमेदिनी १८

निधनानि वसुतोयेधने मणाविति वैजयंती स्वयंप्रदुग्धे अक्लेशेनदुह्यतइत्यर्थः दुहेः कर्मकर्तरिलिट् नदुहस्नुनमांयक्
चिणाविति यक्प्रतिषेधः यथाकेनचिद्दिदुग्धेनरक्षितान्वगौः स्वयमेवप्रदुग्धेतद्वदितिभावः अलंकारस्तुविशेषणमात्र-
साम्यादप्रस्तुतस्यगम्यत्वेसमासोक्तिरितिसर्वस्वकारः अत्रप्रतीयमानयागवासहप्रकृतायामेदिन्याअभेदेऽभेदलक्षणा
दिभिरुपस्नुताद्राविता मेदिनी वसूनि इत्यतिशयोक्तिवशादपोत्थत्वेनोक्तिरितिसंक्षेपः १८ ७

संप्रतिवीरभटानुकूल्यमाह दर्शितपराक्रमावीराः संभावितपराक्रमाभटाः महौजसाइति महौजसोमहाबलाः अ
न्यथादुर्बलानामनुपकारकत्वादितिभावः मानः कुलशीलाद्यभिमानएवधनंयेषांतेमानधनाः अन्यथाकदाचिद्द्ल
र्पाद्द्रिकुर्वीरन्नितिभावः धनार्चिताः धनैःसंस्कृताः अन्यथादारिद्र्याद्देनंजह्युरितिभावः संयतिसंगरेलब्धकीर्त
यः बहुशः क्षुण्णसंग्रामाइत्यर्थः अन्यथाकदाचिन्मुह्येयुरितिभावः संहताःमिथःसंगताः स्वार्थनिष्ठानभवंतीति-

महौजसोमानधनाधनार्चिताधनुर्भृतःसंयतिलब्धकीर्तयः
नसंहतास्तस्यनभिन्नवृत्तयःप्रियाणिवांछंत्यसुभिःसमीहितुं १९

नसंहताः नञर्थस्यनशब्दस्यसुप्सुपेतिसमासः भिन्नवृत्तयोमिथोविरोधात् स्वामिकार्यकरानभवंतीतिनभिन्नवृत्त
यः पूर्ववत्समासः अन्यथास्वामिकार्यहानिःस्यादित्युभयत्रापितात्पर्यं धनुर्भृतः धानुष्काः आयुधमात्रोपलक्षणमेत
त् प्राधान्याद्धनुर्ग्रहणं तस्यदुर्योधनस्यअसुभिःप्राणैः प्रियाणिसमीहितुं कर्तुंवांछंति आनृण्यार्थंप्राणान्दातुमिच्छं
तीत्यर्थः अन्यथाद्रोहस्मरणादितिभावः अत्रमहौजसइत्यादिपदार्थानांप्राणदानकर्तव्यतांप्रतिविशेषणगत्याहेतु ११
त्वाभिधानात्काव्यलिंगमलंकारः लक्षणंतूक्तं तथासाभिप्रायविशेषणत्वात्परिकरालंकारइतिद्वयोस्तिलतंदुलव
द्विविक्ततयास्फुरणात्संसृष्टिः १९

स्वराष्ट्रवत्परराष्ट्रवृत्तांतमपिवेत्तीत्याह महीभृतामिति अशेषितक्रियः समापितकृत्यः आफलोदयकर्मेत्यर्थः सद्दुर्योधनः सच्चरितैः शुद्धचरितैः अवंचकैरित्यर्थः चरंतीतिचरास्तैःप्रणिधिभिः पचाद्यच् महीभृतांक्रियाः प्रारंभान् निःशेषं

महीभृतांसच्चरितैश्चरैःक्रियाःसवेदनिःशेषमशेषितक्रियः
महोदयैस्तस्यहितानुबंधिभिःप्रतीयतेधातुरिवेहितंफलैः २०

वेदवेत्ति विदोलटोवेतिलटोणलादेशः स्वरहस्यंकश्चिन्नवेदेत्याह महोदयैरिति धातुरिवतस्यदुर्योधनस्य हितं सुयोगोमहोदयैर्महावृद्धिभिःहितमनुबध्नंतिअनुरुंधंतीतिहितानुबंधिभिः स्वंतैरित्यर्थः फलैः कार्यसिद्धिभिः प्रतीयते ज्ञायते फलानुमेयास्तस्यप्रारंभाइत्यर्थः २० छ छ छ

संप्रतिमित्रबलमाह नेति तेनराज्ञाक्वचित्कुत्रापिसहज्यया मौर्व्यासज्यं मौर्वीज्यासिंजिनीगुणइत्यमरः तेनसहेति तुल्ययोगइतिबहुव्रीहिः धनुर्नोद्यतंनोर्ध्वीकृतं आननंवाकोपविजिह्मंकोपकुटिलंनकृतं यस्यकोपएवनोदेतिकुतः तस्ययुद्धप्रसक्तिरितिभावः कथंतर्ह्याज्ञांकारयतिराज्ञइत्यत्राह गुणेति गुणेषुदयादाक्षिण्यादिषुअनुरागेणप्रेम्णा

नतेनसज्यंक्वचिदुद्यतंधनुः कृतंनवाकोपविजिह्ममाननं
गुणानुरागेणशिरोभिरुह्यतेनराधिपैर्माल्यमिवास्यशासनं २१

माल्यपक्षेसूत्रानुषंगेणेत्यर्थः अथवासौरभ्यगुणलोभेननराधिपैरस्यशासनं आज्ञामालेवमाल्यंतदिव चतुर्वर्णादित्वात्स्वार्थेष्यञितिक्षीरस्वामी शिरोभिरुह्यतेधार्यते वचिस्वपियजादीनांकितीतियकिसंप्रसारणं अत्रोपमास्फुटैव १२
२१

संप्रत्यस्यधार्मिकत्वमाह सइति इद्धशासनः अप्रतिहताज्ञइत्यर्थः सदुर्योधनो नवयौवनोद्धतं प्रगल्भं धुरंधरमित्यर्थः
दुःखेनशास्तीतिदुःशासनस्तं भाषायांशासियुधीत्यादिनाखलर्थेयुच्प्रत्ययः यौवराज्येयुवराजकर्मणि ब्राह्मणादि
त्वात्ष्यञ् विधायनियुज्येत्यर्थः पुरोधसापुरोहितेनानुमतोनुज्ञातः तस्मिन्याजकेसतीत्यर्थः तदुल्लंघनेदोषस्मरणादि

सयौवराज्येनवयौवनोद्धतं विधायदुःशासनमिद्धशासनः
मखेष्वखिन्नोनुमतः पुरोधसाधिनोतिहव्येनहिरण्यरेतसं २२

तिभावः निष्ठेतिभूतार्थेक्तः नतुमतिबुद्धीत्यादिना वर्तमानार्थे अन्यथापुरोधसेत्यत्र क्तस्यचवर्तमानइति
षष्ठीस्यात् अखिन्नोऽनलसः मखेषुक्रतुषु हिरण्यंरेतोयस्यतंहिरण्यरेतसमग्निं हव्येन हविषा-
आज्यादिहविर्द्रव्येणेत्यर्थः धिनोति प्रीणयति धिन्वेः प्रीणनार्थाद्धिन्विकृण्व्योरचेत्युप्रत्ययोऽका
रश्चांतादेशः २२ छ छ छ छ छ

सएवंविधश्चेदुद्योगी तर्ह्यस्माभिर्निरुद्योगैर्भाव्यमित्याशंक्य उद्योगाशांदर्शयति प्रलीनभूपालमिति सदुर्योधनः प्रलीनभूपालं निःसपत्नमित्यर्थः स्थिरायति चिरस्थायीत्यर्थः भुवोमंडलं आवारिधिभ्यः आवारिधि आङ्मर्यादाभिविध्योरित्यव्ययीभावः प्रशासदाज्ञापयन्नपि जक्षित्यादयःषडित्यभ्यस्तसंज्ञा नाभ्यस्ताच्छतुरितिनुमागम

प्रलीनभूपालमपिस्थिरायतिप्रशासदावारिधिमंडलंभुवः
सचिंतयत्येवभियस्त्वदेष्यतीरहोदुरंताबलवद्विरोधिता २३

प्रतिषेधः त्वत् त्वत्तः एष्यतीः आगमिष्यतीः धातूनामनेकार्थत्वादुक्तार्थसिद्धिः अथवाआङ्पूर्वः पाठः एत्येधत्यूठ्स्वितिवृद्धिः लृटः सद्वेतिसत्प्रत्ययः उगितश्चेतिङीप् आच्छीनद्योर्नुमितिविकल्पान्नुमभावः भियोभयहेतून् विपदइत्यर्थः चिंतयत्यालोचयत्येव सएवाह अहोबलवद्विरोधितादुरंता दुष्टावसाना सार्वभौमस्यापिप्रबलैः सह वैरायमाणत्वमनर्थपर्यवसाय्येवेत्याश्चर्यं सामान्येनविशेषसमर्थनरूपोर्थांतरन्यासः २३ १३

छ

ननुगूढाकारेंगितस्यतस्यभयंत्वयाकथंनिरधारीत्याह कथाप्रसंगेनेति कथाप्रसंगेन गोष्ठीवशेनजनैः अन्यत्रक
थाप्रसंगेन विषवैद्येन कथाप्रसंगोवार्तायांविषवैद्येपिवर्तनइतिविश्वः एकवचनस्यापिकथाप्रसंगशब्दस्यजात्यभि
प्रायेणबहुवचनेनसंबंधाज्जनविशेषणं यद्वाकथाप्रसंगेइनाः तेचतेजनाश्चेत्येकंपदं उदाहृतादुच्चारितात् तवाभि
धानान्नामधेयात्स्मारकाद्धेतोः हेतावितिपंचमी आख्याव्हेअभिधानंचनामधेयंचनामचेत्यमरः अनुस्मृताखंडल
सूनुविक्रमः स्मृतार्जुनपराक्रमः अन्यत्रत्तवाभिधानान्नामैकदेशेनामग्रहणमितिन्यायात् तश्चवश्चतवौताक्ष्र्य-

कथाप्रसंगेनजनैरुदाहृतादनुस्मृताखंडलसूनुविक्रमः तवाभिधानाद्व्यथतेननताननःसुदुःसहान्मंत्रपदादिवोर

ग॰ २४

वासुकीतयोरभिधानंयस्मिन्पदेतस्मात् सुदुःसहादतिदुःसहान्मंत्रपदान्मंत्रशब्दात्स्मारकाद्धेतोः आखंडलसूनुरिंद्रानु-
जः उपेंद्रोविष्णुरितियावत् सूनुःपुत्रेनुजेरवावितिविश्वः तस्यविः पक्षीगरुडइत्यर्थः विःपक्षिपरमात्मनोरित्यमरः तस्य
क्रमः पादविक्षेपः सोनुस्मृतोयेनसतथोक्तः स्मृतगरुडमहिमाउरगइवनताननःसन् उरगःपन्नगोभोगीजिह्मगःपव
नाशनइत्यमरः व्यथतेदुःखायते पीडाबाधाव्यथादुःखमित्यमरः अत्युत्कटभयदोषादिविकारादुर्वाराइतिभावः सर्व
त्रजयमन्विच्छेत्पुत्रादिच्छेत्पराजयमितिन्यायादर्जुनोत्कर्षकथनंयुधिष्ठिरस्यभूषणमेवेतिसर्वमवदातं २४

उक्तमर्थंनिगमयति तद्विति तत्तस्मात्त्वयिजिह्मंकपटंकर्तुंउद्यते त्वांजिघांसावित्यर्थः तत्रतस्मिन्दुर्योधनेविधेयं कर्तव्यमुत्तरंप्रतिक्रियारूपंआशुविधीयतांक्रियतांननुतत्कर्तव्यमपित्वयैवोच्यतामित्यत्राक्षेपआह परेति परप्रणीतानिपरोक्तानिवचांसिचिन्वतांगृह्यतांमादृशांवार्ताहारिणामित्यर्थः गिरःप्रवृत्तिसाराः वार्तामात्रसाराःखलु

तदाशुजिह्मंत्वयिकर्तुमुद्यतेविधीयतांतत्रविधेयमुत्तरं
परप्रणीतानिवचांसिचिन्वतांप्रवृत्तिसाराःखलुमादृशांगिरः२५

एवार्थे वार्ताप्रवृत्तिर्वृत्तांतइत्यमरः वार्तामात्रवादिनोवयंनतुकर्तव्यार्थोपदेशसमर्थाः अतस्त्वयैवनिर्धार्यकार्यमितिभावः सामान्येननिमित्तविशेषसमर्थनादर्थांतरन्यासः २५ छ छ

इतीति वनसंनिवासिनांपत्यौ वनेचराधिपइतिगिरमीरयित्वाउक्त्वाआत्तसत्क्रियेगृहीतपारितोषिकेगतेसति तुष्टिदानमेव
चाराणांवेतनंतेहितल्लोभात् स्वामिकार्येऽतीवत्वरयंतीतिनीतिवाक्यामृतात् अथमहीभुजाराज्ञाकृष्णासदनंद्रौपदीगृ
हंप्रविश्य अनुजसंनिधौतद्वनेचरोक्तंवच आचचक्षे आख्याता चक्षिङोदुहादेर्द्विकर्मकत्वादप्रधानेकर्मणिलट् २६ नि

इतीरयित्वागिरमात्तसत्क्रियेगतेथपत्यौवनसंनिवासिनां प्रविश्यकृष्णासदनंमहीभु
जातदाचचक्षेनुजसंनिधौवचः २६ निशम्यसिद्धिंद्विषतामपाकृतीस्ततस्ततस्त्याविनि
यंतुमक्षमा नृपस्यमन्युव्यवसायदीपिनीरुदाजहारद्रुपदात्मजागिरः २७ छ

शम्येति ततः द्रुपदात्मजाद्रौपदी द्विषतांसिद्धिंवृद्धिरूपां निशम्य ततोद्विषद्भ्यआगताः ततःस्त्याः अव्ययात्त्यबितित्यप्
अपाकृतीः विकारान् विनियंतुं निरोद्धुंत्हृदयइतिशेषः अक्षमासती नृपस्ययुधिष्ठिरस्यमन्युव्यवसाययोः क्रोधोद्योग-
योः दीपिनीः संवर्धिनीः गिरो वाक्यान्युदाजहार जगाद २७ छ छ

भवादृशेष्विति भवादृशाभवद्विधाः पंडिताइत्यर्थः तेषुविषये त्यदादिष्वित्यादिनाकञ् आसर्वनाम्नइत्याकारादे
शः प्रमदाजनोदितंस्त्रीजनोक्तं वदेक्तः वचिस्वपीत्यादिनासंप्रसारणं अनुशासनंनियोगवचनमधिक्षेपस्तिरस्कार



भवादृशेषुप्रमदाजनोदितंभवत्यधिक्षेपइवानुशासनम्
तथापिवक्तुंव्यवसाययंतिमांनिरस्तनारीसमयादुराधयः २८

इतिभवति अतोनयुक्तंवक्तुमित्यर्थः तथापिवक्तुमनुचितेपिनिरस्तनारीसमयाः त्याजितशालीनतारूपस्त्रीसदाचा
राः समयाःशपथाचारकालसिद्धांतसंविदइत्यमरः दुराधयः समयोल्लंघनहेतुत्वादुष्टामनोव्यथाः पुंस्याधिर्मानसीव्य
थेत्यमरः मांवक्तुंव्यवसाययंति प्रेरयंति नकिंचिदयुक्तं दुःखिनामिति भावः २८ छ

अथचतुर्भिः कोपमुद्दीपयंत्याह अखंडमिति आखंडलतुल्यधामभिरिंद्रसमप्रतापैः स्ववंशजैर्भूपतिभिः भरता
दिभिः चिरमखंडमविच्छन्नंधृतामहीत्वया मदंश्चोततीतिमदश्च्युत् क्विप् तेनमदस्राविणा मतंगजेनस्रगिव आत्मह
स्तेनस्वकरेण स्वचापल्येनेत्यर्थः अपवर्जिता अपरिहृतास्वदोषादेवायमनर्थागमइत्यर्थः २९ स्वदोषादेवायमनर्था
गमइत्युक्तंसचदोषः कुटिलेष्वकौटिल्यमेवेत्याह व्रजंतीति मूढधियो निर्विवेकबुद्धयः तेपराभवंव्रजंति येमायाविषु

अखंडमाखंडलतुल्यधामभिश्चिरंधृताभूपतिभिःस्ववंशजैः त्वयात्महस्तेनमही
मदश्च्युतामतंगजेनस्रगिवापवर्जिता २९ व्रजंतितेमूढधियःपराभवंभवंतिमाया
विषुयेनमायिनः प्रविश्यहिघ्नंतिशठास्तथाविधानसंवृतांगान्निशिताइवेषवः ३०

मायावत्सुविषये अस्मायेत्यादिनाविनिप्रत्ययः मायिनोमायावंतः व्रीह्यादित्वादिनिप्रत्ययः नभवंति अत्रैवार्थां
तरंन्यास्यति प्रविश्येति शठाःअपकारिणः धूर्तास्तथाविधान् अकुटिलान् असंवृतांगान् अवर्मितशरीरान् नि
शितास्तीक्ष्णाइषवइव प्रविश्यप्रवेशंकृत्वाघ्नंतिहि आर्जवंहिकुटिलेषुननीतिरितिभावः ३० छ

नचलक्ष्मीचांचल्याद् यमनर्थागमः किंतुस्वोपेक्षादोषमूलत्वादित्याशयेनाह गुणानुरक्तामिति अनुरक्तसाधनः अ
नुकूलसहायवान् उक्तंच कामंदके उद्योगादनिवृत्तस्यसुसहायस्यधीमतः छायेवानुगतातस्यनित्यंश्रीःसहचारि
णीति कुलाभिमानीक्षत्रियवंशाभिमानीकुलीनत्वाभिमानीच त्वदन्यः त्वत्तोन्यः अन्यारादित्यादिनापंचमी कइ

गुणानुरक्तामनुरक्तसाधनः कुलाभिमानीकुलजांनराधिपः
परैस्त्वदन्यःकइवापहारयेन्मनोरमामात्मवधूमिवश्रियं ३१

व कोवाइवशब्दोवाक्यालंकारे नराधिपः गुणैः संध्यादिभिः सौंदर्यादिभिश्चानुरक्तांसानुरागांकुलजांकुलक्र
मादागतांकुलीनांचमनोरमांश्रियंआत्मवधूंस्वभार्यामिव वधूर्जायास्नुषास्त्रीचेत्यमरः परैः शत्रुभिरपहारयेन्
स्वयमेवापहारंकारयेदित्यर्थः कलत्रापहारवल्लक्ष्म्यपहारोपिराज्ञांमानहानिकरत्वादनुपेक्षणीयइतिभावः ३१

अथदशभिः कोपोद्दीपनंकरोति भवंतमिति हेनरदेवनरेंद्र एतर्हि इदानींअस्मिन्नापत्कालइत्यर्थः एतर्हि संप्रतीदानी मधुनासांप्रतंतथेत्यमरः इदमोर्हिलितिहिल्प्रत्ययः एतेतौरथोरित्येतादेशः आपदमेवाह मनस्विगर्हिते शूरजनजुगु प्सितेवर्त्मनिमार्गेविवर्तमानं शत्रुणाकृतां दुर्दशांअनुभवंतमित्यर्थः भवंतमुदीरितः उद्दीपितोमन्युः क्रोधः शुष्कं

भवंतमेतर्हिमनस्विगर्हितेविवर्तमानंनरदेववर्त्मनि कथंनम
न्युर्ज्वलयत्युदीरितः शमीतरुंशुष्कमिवाग्निरुच्छिखः ३२

नीरसं शुषेः कइतिनिष्ठातकारस्यककारः शमीचासौतरुश्चेतिविशेषणसमासः तंशमीतरुं शमीग्रहणं शी घ्रज्वलनस्वभावात्कृतं उच्छिकःउद्भूतज्वालः घृणिज्वालेअपिशिखइत्यमरः वन्हिरिव कथंनज्वलयति ज्वल यितुमुचितमित्यर्थः मितांह्रस्वइतिह्रस्वः ३२ ७ ७

ननुअंततः शत्रुत्वाद्यं क्रोधस्त्याज्य एवेत्याशंक्याह अवंध्यकोपस्येति अवंध्यकोपस्य अतएव आपदां विहंतुः नि ग्रहानुग्रहसमर्थस्येत्यर्थः सुंसइतिशेषः देहिनोजंतवः स्वयमेववश्यावशंगताभवंति वशंगताइतियत्प्रत्ययः अतस्त्वयाकोपिनाभवितव्यमित्यर्थः व्यतिरेकेत्वनिष्टमाचष्टे अमर्षशून्येननिष्कोपेनजंतुना कन्ययाशोकइति वद्धेताविति तृतीया हृदयस्यकर्महार्दंस्नेहः प्रेमानाप्रियताहार्दंप्रेमस्नेहोथदोहदमित्यमरः युवादित्वादण्प्रत्य

अवंध्यकोपस्यविहंतुरापदांभवंतिवश्याः स्वयमेवदेहिनः
अमर्षशून्येनजनस्यजंतुनानजातहार्देनचविद्विषादरः ३३

यः हृदयस्यहृल्लेखयदण्लासेष्विति हृदादेशः जातहार्देनजातस्नेहेनजनस्यआदरेन विद्विषाविद्विषताचसता आदरेन अमर्षहीनस्यरागद्वेषावकिंचित्कारत्वादगण्यावित्यर्थः अथवाविद्विषासतादरोभयंन दरोस्त्रियांभये- श्वभ्रइत्यमरः एकस्मिन्नेवप्रयोगेसंधिवशात् द्विधापदच्छेदः पुंवाक्येषुनदोषः अतः स्थानेकोपः कार्यः त्याज्य स्त्वस्थानेकोपइतिभावः ३३ **१७**

परिभ्रमन्निति लोहितचंदनोचितः उचितलोहितचंदनः वाहिताग्न्यादिष्विति साधुः अभ्यस्तरक्तचंदन इत्यर्थः अभ्यस्ते ष्वुचितंन्याय्य इति यादवः महारथो रथचारी उभयत्रापि प्राग् इति शेषः अद्य तु रेणुरूषितो धूलिलुलितः पादाभ्यामतति गच्छतीति पदातिः पादचारी अज्यतिभ्यां चेत्यनुवृत्त्या पादे चेत्यौणादिक इण् प्रत्ययः पादस्य पद् आज्यातिगोपहतेष्विति पदादेशः गिरिषु अंतः अंतर्गिरि विभक्त्यर्थे व्ययीभावः गिरेश्च सेनकस्येति विकल्पात्समासांताभावः परिभ्रमन्नयं वृकोदरः भीमः सत्यधनस्येति सोल्लुंठनं वचनं अद्यापि त्वया सत्यमेव रक्ष्यते न तु भ्रातर इति भावः त्वं वेति शेषः मानसं नो दुनोति क्वचित् न परितापयति किं कच्चित्कामप्रवेदन इत्यमरः स्वाभिप्रायाविष्करणं कामप्रवेदनम् ३४

परिभ्रमन् लोहितचंदनोचितः पदातिरंतर्गिरिरेणुरूषितः
महारथः सत्यधनस्य मानसं दुनोति नो कच्चिदयं वृकोदरः ३४

छ छ छ

विजित्येति वासवउपमायस्यसः वासवोपमः इंद्रतुल्योयोधनंजयः उत्तरान्कुरून् मेरोरुत्तरानमानुषान् देशवि
शेषान् विजित्य प्राज्यंप्रभूतं प्रभूतंप्रचुरंप्राज्यमदभ्रंबहुलंबहुइत्यमरः कुप्यादन्यदकुप्यं हेमरूप्यात्मकंस्या
त्कोशश्चहिरण्यंचहेमरूप्येकृताकृते ताभ्यांयदन्यत्तत्कुप्यमित्यमरः वसुधनमयच्छत् दत्तवान् पाघ्रेत्यादिना

विजित्ययःप्राज्यमयच्छदुत्तरानूकुरूनकुप्यंवसुवासवोपमः
सवल्कवासांसितवाधुनाहरन्करोतिमन्युंनकथंधनंजयः ३५

द्यणोयच्छादेशः सधनंजयतीतिधनंजयः अर्जुनः संज्ञायांभृतृव्रजीत्यादिनाखच्प्रत्ययः अरुर्द्विषदित्या
दिनामुमागमः अधुनाअस्मिन्कालेअधुनेतिनिपातनात्साधुः वल्कवासांसि आहरन् कथंतवमन्युंक्रो
धंदुःखंवानकरोति ३५ छ छ छ

वनांतशय्येति वनस्यअंतःस्वरूपं अंतः प्रांते ऽतिकेनाशेस्वरूपेचमनोहरइतिविश्वः वनांतः वनभूमिरेवशय्यातया
कठिनीकृताकृतीकठिनीकृतदेहौ आकारोदेहआकृतिरितिवैजयंती विष्वक्समंतात् समंततस्तुपरितःसर्वतोविष्व
गित्यपीत्यमरः कचाचितौकचव्याप्तौ विशीर्णकेशावित्यर्थः अतएवागजौगिरिसंभवौगजाविव स्थिताविति शेषः

वनांतशय्याकठिनीकृताकृतीकचाचितौविष्वगिवागजौगजौ
कथंत्वमेतौधृतिसंयमौयमौविलोकयन्नुत्सहसेनबाधितुं ३६

एतौयमौयुग्मजातौ माद्रीपुत्रावित्यर्थः यमोदंडधरेध्वांक्षेसंयमेयमजेपिचेतिविश्वः विलोकयंस्त्वंकथंधृतिसं-
यमौसंतोषनियमौ धृतिर्योगांतरेधैर्येधारणाध्वरतुष्टिष्वित्यमरः बाधितुंनोत्सहनेनप्रवर्तसे शकधृषेत्यादिना
तुमुन् अहोतेमहद्धैर्यमितिभावः ३६ ७ ७ ७

संतोष और नेम जो मन धर्म है धार इन को बाधितुं कौन्य त्याग ए ... कैसा न हिम्मत वर्त होता है

अथराज्ञोदुर्दर्शांदर्शयितुमुपोद्घातमाह प्रकृतार्थंवर्णयितुंअर्थांतरवर्णनमुपोद्घातः इमामिति इमांवर्तमानांत
वेमांतावकींत्वदीयां तस्येदमित्यण्प्रत्ययः तवकममकावेकवचनइतितवकादेशः धियंत्वदापद्विषयांचित्तवृ
त्तिमहंनवेद कीदृशींवानवेद्मि परबुद्धेरप्रत्यक्षत्वादितिभावः विदोलटोवेतिलटोणलादेशः नचात्मदृष्टांतेनाप
न्नदुःखित्वमनुमातुंशक्यते धीरादिष्वनैकांतिकत्वादित्याशयेनाह चित्तवृत्तयोविचित्ररूपाः धीराधीराद्यनेकप्रका

इमामहंवेदनतावकींधियंविचित्ररूपाःखलुचित्तवृत्तयः
विचिंतयंत्याभवदापदंपरांरुजंतिचेतःप्रसभंममाधयः ३७

राःखलु किंतुपरामुत्कृष्टांभवदापदंविचिंतयंत्याः भावयंत्याःममचेतश्चित्तंआधयोमनोव्यथाः उपसर्गेघोःकिरि
तिकिप्रत्ययः प्रसभंप्रसह्यरुजंति रुजोभंगइतिधातोर्लट् पश्यतामपिदुःसहादुःखजननीत्वद्विपत्तिरनुभवितारं १९
त्वांकथंनविकरोतीतिमहच्चित्रमित्यर्थः चेतइतिरुजार्थानांभाववचनानामज्वरइतिषष्ठीनभवति तत्रशेषाधिका
राच्छेषत्वस्याविवक्षितत्वादिति ३७

तदापदमेव श्लोकत्रयेणाह पुराधिरूढइति यस्त्वंमहाधनंबहुमूल्यंश्रेष्ठमित्यर्थः महाधनंबहुमूल्यमितिविश्वः शयनंशय्यामधिरूढः सन् स्तुतयोगीतयश्चताएवमंगलानितैः करणभूतैःपुराविबोध्यसे वैतालिकैरितिशेषः पूर्वंविबोधितइत्यर्थः पुरिलुङ्चास्मइतिभूतार्थेलट् सत्वमदभ्रदर्भांबहुकुलां अस्त्रीकुशंकुथोदर्भः अदभ्रंबहु-

पुराधिरूढः शयनंमहाधनंविबोध्यसेयः स्तुतिगीतिमंगलैः
अदभ्रदर्भामधिशय्यसःस्थलींजहासिनिद्रामशिवैःशिवारुतैः ३८

लंबहुइत्यमरः स्थलीमकृत्रिमभूमिं जानपदेत्यादिना, कृत्रिमार्थेङीप् एतेनदुःसहस्पर्शत्वमुक्तं अधिशीङ्स्थासांकर्मेतिकर्मत्वं अधिशय्यशयित्वा अयङ्किङितिइत्ययङादेशः अशिवैः अमंगलैः शिवारुतैः क्रोष्टुवाशितैः शिवाहरीतकीक्रोष्ट्रीशमीनद्यामलक्युमेतिवैजयंती निद्रांजहासि अद्येतिशेषः ३८

पुरोपनीतमिति हेनृपयदेतत्पुरोवर्तिवपुः पुराद्विजातिशेषेणाद्विजभुक्तावशिष्टेन अंधसाअंनेन भिस्साखीभ-
क्तमंधोन्नमित्यमरः रमणीयस्यभावः रामणीयकं मनोहरत्वमुपनीतं प्रापितं नयतेर्द्विकर्मकत्वादप्रधानेकर्म-



पुरोपनीतंनृपरामणीयकंद्विजातिशेषेणयदेतदंधसा
तदद्यतेवन्यफलाशिनःपरंपरैतिकार्श्यंयशसासमंवपुः ३९

णिक्तः प्रधानकर्मण्याख्येयेलादीनाहुर्द्विकर्मणामितिवचनात् अद्यफलाशिनस्तेतवतद्वपुर्यशसासमं परम
तिमात्रंकार्श्यंपरैतिप्राप्नोतिउभयमपिक्षीयतइत्यर्थः अत्रसहोक्तिरलंकारः तदुक्तंकाव्यप्रकाशे सासहोक्तिः
सहार्थस्यबलादेकार्थवाचकमिति ३९ छ छ छ

अनारतमिति अनारतमजस्रंमणिपीठशायिनौमणिमयपीठशायिनौयौचरणौराजशिरःस्रजांनमद्भूपाल-
मौलिस्रजांरजःपरागोऽरंजयत् तेनवतौचरणौमृगैर्द्विजैश्चतपस्विभिरालूनशिखेषुछिन्नाग्रेषुबर्हिषांकुशा
नां बर्हिःकुशहुताशयोरितिविश्वः वनेषुनिषीदतस्तिष्ठतः ४० ननुसर्वप्राणिसाधारण्यामापदिकापरिवेद
नेत्यत्राह द्विषन्निमित्तेति यद्यतःकारणादियंदशावस्था दशावर्तावस्थायामितिविश्वः द्विषंतोनिमित्तं-

अनारतंयौमणिपीठशायिनावरंजयद्राजशिरःस्रजांरजः निषीदतस्तौचरणौ
वनेषुतेमृगद्विजालूनशिखेषुबर्हिषाम् ४० द्विषन्निमित्तायदियंदशाततःसमूल
मुन्मूलयतीवमेमनः परैरपर्यासितवीर्यसंपदांपराभवोप्युत्सवएवमानिनाम् ४१

यस्याःसाद्विषोऽमित्रइतिशत्रप्रत्ययः अप्रियनिमित्तेत्यर्थः अतःमेमनःसमूलंसाशयमुन्मूलयतीवउत्पाटय
तीव दैविकीत्वापन्नदुःखायेत्याह परैःशत्रुभिःअपर्यासिता अपर्यावर्तितावीर्यसंपदोयेषांतेषांमानिनांपराभ
वोविपदप्युत्सवएवभवति वैधर्म्येणार्थांतरन्यासः मानहानिर्दुःसहानत्वापदितिभावः ४१ ७ ७

विहायेति हेनृपशांतिंविहायतत्प्रसिद्धंधामतेजोविद्विषांवधायपुनःसंधेहि अंगीकुर्वित्यर्थः प्रसीद अस्मानिति
शेषः प्रार्थनायांलोट् शमेनकार्यसिद्धौ किंक्रोधेनेत्यत्राह व्रजंतीति निःस्पृहाःमुनयःशत्रून्अंतःशत्रून् अव
धूयनिर्जित्यशमेनक्रोधवर्जनेनसिद्धिंव्रजंतिभूभृतस्तुन कैवल्यकार्यवद्राजकार्येनशांतिसाध्यमित्यर्थः ४२ पुरःस
राइति किंचधामवतांतेजस्विनाम् परनिकारासहिष्णूनामित्यर्थः पुरःसरंतितेपुरःसराः अग्रेसराः पुरोग्रतोग्रेषुस

विहायशांतिंनृपधामतत्पुनःप्रसीदसंधेहिवधायविद्विषाम् व्रजंतिशत्रूनवधूयनिः
स्पृहाःशमेनसिद्धिंमुनयोनभूभृतः ४२ पुरःसराधामवतांयशोधनाःसुदुःसहंप्रा
प्यनिकारमीदृशम् भवादृशाश्चेदधिकुर्वतेरतिंनिराश्रयाहंतहतामनस्विता ४३

तैरितिटप्रत्ययः यशोधनाः भवादृशाः सुदुःसहमतिदुःसहंईदृशमुक्तप्रकारंनिकारंपराभवंप्राप्यरतिंसंतोषमधिकु
र्वतेस्वीकुर्वतेचेत्हंतइतिखेदेमनस्विताअभिमानितानिराश्रयासतीहता तेजस्विनैकशरणत्वान्मनस्वितायाइत्य
र्थः अतःपराक्रमितव्यमितिभावः यद्यप्यत्रप्रसहनस्यासंगतेरधिपूर्वात्करोतेः अधेःप्रसहनइत्यात्मनेपदंनभवति २१
प्रसहनंपरिभवइतिकाशिकातथाप्यस्याःकर्त्रभिप्रायविवक्षायामेवप्रयोजकत्वात्कर्त्रभिप्रायेस्वरितञितइत्यादिनै
वात्मनेपदंप्रसिद्धम् ४३

अथेति अथपक्षांतरेनिरस्तविक्रमःसन्चिरायचिरकालेनापिक्षमांक्षांतिमेव क्षितिक्षांत्योःक्षमेत्यमरः स्त्रुवस्यसा धनंपर्यैषिअवगच्छसि नहिलक्ष्मीपतिलक्ष्मराजचिह्नंकार्मुकंविहाय धरतीतिधरः पचाद्यच् जटानांधरःजटाधरः

अथक्षमामेवनिरस्तविक्रमश्चिरायपर्यैषि स्त्रुवस्यसाधनम्
विहायलक्ष्मीपतिलक्ष्मकार्मुकंजटाधरःसन्जुहुधीहपावकम् ४४

सन्इहवनेपावकंजुहुधि पावकेहोमंकुर्वित्यर्थः अधिकरणेकर्मत्वोपचारः विरक्तस्यकिंधनुषेत्यर्थः हुझल्भ्योहेर्धिः ४४

अथसमयोल्लंघनाद्विभेषिचेत्तदपिनकिंचिदित्याह नेति परेषुशत्रुषुनिकृतिः शाठ्यंपरंप्रधानंयेषुतेषुतथोक्तेषुअप-
कारतत्परेषुसत्सु भूरिधाम्नोमहौजसः प्रतीकारक्षमस्येत्यर्थः तेतवसमयस्त्रयोदशवत्सरान् वनेवत्स्यामीत्येवं
रूपासंवित् समयाःशपथाचारकालसिद्धांतसंविदइत्यमरः तस्यपरिरक्षणंप्रतीक्षणंनक्षमंनयुक्तं युक्तेक्ष्मसंश
क्तहितेत्रिष्वित्यमरः हियस्माद्विजयार्थिनोविजिगीषवः क्षितीशाःअरिषुरिपुषुविषयेसोपधिसकपटंयथाभव-

नसमयपरिरक्षणंक्षमंतेनिकृतिपरेषुपरेषुभूरिधाम्नः अरि
षुहिविजयार्थिनःक्षितीशाविदधतिसोपधिसंधिदूषणानि ४५

तितथा कपटोस्त्रीव्याजदंभोपधयश्छद्मकैतवइत्यमरः संधिदूषणानिविदधतिकुर्वते केनचिद्व्याजेनदोषमापाद्य-
संधिंदूषयंतिविघटयंतीत्यर्थः शक्तस्यहिजिगीषोःसर्वथाकार्यसाधनंप्रधानंअन्यत्समयरक्षणादिकमशक्तस्ये
तिभावः अर्थांतरन्यासोऽलंकारः पुष्पिताग्रावृत्तंलक्षणं अयुजिनयुगरेफतोयकारोयुजिचनजौजरगाश्चपुष्पि
ताग्रेति ४५ ७ ७ ७ ७ ७

उक्तमर्थमाशीर्वादपूर्वकमुपसंहरति विधिसमयनियोगादिति विधिर्दैवं विधिर्दैवेविधानेचेत्यमरः समयःकालस्त योर्नियोगान्नियमाद्धेतोः तयोर्दुरतिक्रमत्वादितिभावः अगाधेदुस्तरे आपत्पयोधिरिवेत्युपमितसमासः दिनकृत मिवेतिवक्ष्यमाणानुसारात् तस्मिन्नापत्पयोधौमग्नं सूर्योऽपिसायंसायंसागरेमज्जतिपरेद्युरुन्मज्जतीत्यागमः दीप्तिःप्रतापः आतपश्चतस्याः संहारेणजिह्ममप्रसन्नं शिथिलवस्कं शिथिलधनं अन्यत्रशिथिलरश्मिं वस्कईदे

विधिसमयनियोगाद्दीप्तिसंहारजिह्मंशिथिलवस्कमगाधेमग्नमापत्पयोधौ
रिपुतिमिरमुदस्योदीयमानंदिनादौदिनकृतमिवलक्ष्मीस्त्वांसमभ्येतुभूयः ४६

प्तौरश्मौचवस्कतोयेधनेमणाविति वैजयंती शिथिलबलमितिपाठेतूभयत्रापिशिथिलशक्तिकमित्यर्थः अथरिपु स्तिमिरमिवतद्रिपुतिमिरंउदस्यनिरस्यउदीयमानमुद्यन्तं इङ्गताविति धातोर्दैवादिकात्कर्तरिशानच् त्वांदिनादौदि नकृतमिवलक्ष्मीर्भूयः समभ्येतुभजतु आशिषिलिङ्लोटाविति लोट् चमत्कारितयामंगलाचरणरूपतयाचस

गांतश्लोकेषुलक्ष्मीशब्दप्रयोगः यथाहभगवान्भाष्यकारः मंगलादीनिमंगलमध्यानिमंगलांतानिशास्त्राणिप्रथंते
वीरपुरुषाण्यायुष्मत्पुरुषाणिचभवंति अध्येतारश्चप्रवक्तारोभवंतीति पूर्णोपमेयं मालिनीवृत्तं सर्गांतत्वाद्वृत्तभेदः
यथाहदंडी सर्गैरनतिविस्तीर्णैः श्राव्यवृत्तैः सुसंधिभिः सर्वत्रभिन्नसर्गांतैरुपेतंलोकरंजनमिति ४६ अथकविः
काव्यवर्ण्यनामाख्यानपूर्वकंसर्गपरिसमाप्तिंकथयति इतीति इतिशब्दःपरिसमाप्तौ भारविकृताविति कवि

इतिभारविकृतौमहाकाव्येकिरातार्जुनीयेप्रथमःसर्गः ७

नामकथनं महाकाव्यइतिमहच्छब्देनलक्षणसंपत्तिःसूचिता किरातार्जुनीयइतिकाव्यवर्ण्ययोःकथनं प्रथमःस
र्गःसमाप्तइतिशेषः एवमुत्तरत्रापिद्रष्टव्यंकिरातार्जुनावधिकृत्यकृतोग्रंथःकिरातार्जुनीयंशिशुक्रंदयमसभद्वंद्वेंद्र
जननादिभ्यश्छइतिद्वंद्वाच्छप्रत्ययः राघवपांडवीयमितिवत् तथाप्यर्जुनएवात्रनायकः किरातस्तुतदुत्कर्षायप्रति

भटतयावर्णितः वंशावीर्यप्रतापादीन्वर्णयित्वारिपोरपि तज्जयान्नायकोत्कर्षकथनंचधिनोतिनइति अथा-
र्यसंग्रहः नेतामध्यमपांडवोभगवतानारायणेनप्रभुस्तस्योत्कर्षकृनेतुवर्ण्यतितथादिव्यःकिरातःपुनः शृंगा-
रादिरसोंगमत्रविजयीवीरःप्रधानंरसःशैलाद्यानिचवर्णितानिबहुशोदिव्यास्त्रलाभःफलं इतिश्रीमहो-
पाध्यायकोलाचलमल्लिनाथसूरिविरचितायांकिरातार्जुनीयकाव्यव्याख्यायांघंटापथसमाख्यायांप्रथमःसर्गः
समाप्तः ॐ शाके १७८३ दुर्मतिनामसंवत्सरेश्रावणकृष्णत्रयोदश्यांसोमेसमाप्तोयम् ॐ श्रीकृष्णार्पणमस्तु ॐ
हासर्गमुंबईयेथेंबापूहरशेटदेवळेकरयांचाशिलायंत्रछापरवान्यांतछापिला ॐ ॐ ॐ ॐ

इतिकिरातार्जुनीयेमहाकाव्येप्रथमःसर्गःसमाप्तोयं

